॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचितः
॥ श्री मध्वविजयः ॥

१६. षोडशः सर्गः

साधुभ्यो मधुमथनांघ्रिभक्तिभाग्भ्यः
श्रौतेभ्यो विततमतेर्महानुभावम् ।
वेदांतं स्वयमिव बंधमोक्षमूलं
व्याचष्ट स्फुटमथ कोऽपि कोविदोऽत्र ॥ १६.१ ॥

गोमत्यास्तटनिकटेऽच्छकीर्तिचंद्रं विश्वज्ञं क्षितिपतिरंत्यवर्णजन्मा ।
विद्वेष्टा श्रुतिगुणसाधकं श्रुतीनां वाचालो वचनमुवाच वाग्मिवर्यम् ॥ १६.२ ॥

उन्मत्तप्रलपितवन्न तद्धि मानं यद् वाक्यं व्यभिचरति क्वचित् फलेऽत्र ।
दृष्टांतो भवति तदप्रमाणतायां सर्वेषां श्रुतिवचसां च सर्वथेति ॥ १६.३ ॥

वेदोक्तं फलमलमाप्यतेऽधिकाराद् इत्युक्तोऽतनुमनसाऽभ्यधत्त धूर्तः ।
योग्यत्वे सति न हि दृश्यतेऽधिकारी नातः स्यात् स खरविषाणवत् सदेति ॥
१६.४ ॥

आक्षेपं तमसहमान उद्यमानः सद्योऽसौ निजकरपल्लवद्वयेन ।
आदाय व्यतनुत बीजमोषधीनां सूक्तेनांकुरदलपुश्पबीजसृष्टिम् ॥ १६.५ ॥

व्याख्याता निशि स कदाचन प्रदीपे
संशांते पुनरपि वाचयांबभूव ।
शिष्यान् स्वान् पुरुकरुणांबुधिर्निजांघ्रेः
अंगुष्ठस्फुटनखरांतरोचिषैव ॥ १६.६ ॥

तीर्थार्थं पृथुतरवप्रपातिवारां धाराणां रयसहनक्षमां महेक्षः ।
आनीतां दशशतपुंभिरत्यशक्त्या प्रेक्ष्योचे विपुलशिलां क्वचित् स मुक्ताम् ॥

१६.७ ॥

लोकानामुपकृतये कुतः शिलेयं निन्ये नो इति जनता जगाद तत्र ।
नेतारो यतिवर मानवा न हीमां भीमश्चेदिह यतते नयेन्न वेति ॥ १६.८ ॥

निन्ये तां गिरिमिव वानरीकृतात्मा लीलावत्करकमलेन सोऽमलेन ।
तत्रापि न्यधित तयाऽस्य सूच्यतेऽलं तत् तुंगां ननु निकषाऽधुनाऽपि कर्म ॥ १६.९ ॥

संघातैरधिकघनैरलंकृताध्वा शिष्याणां यतमनसामुतेतरेषाम् ।
यत्रामा वसति तिथाविनेन चंद्रः तत्रासौ सकलमतिः ससार सिंधुम् ॥ १६.१० ॥

आर्द्राण्गाः सपदि निमज्जनात्सरस्यांकण् वस्य द्विजऋशभस्य वल्लभायाम् ।
तत्राऽयन् खरकिरणोपरागहेतोः ग्रामीणा अपि सकलाः सबालवृद्धाः ॥ १६.११ ॥
सर्वज्ञं सपरिजनं समीक्षमाणाः
फुल्लाक्षाः स्मितवदनाः शुभा ननंदुः ।
दौर्मुख्यं दधत उतापरे निनिंदुः
नाऽश्चर्यं द्वयमपि तत् स्वभावतंत्रम् ॥ १६.१२ ॥

मा मैनं भुवनगुरुं विनिंदतेत्थं
निर्भर्त्स्याभ्यपतदिवोत्तरंगहस्तः ।
संक्षोभी घनघनघोषघोरवेषः
संरंभी खलदमनाय सिंधुराजः ॥ १६.१३ ॥

सम्मोदात्त तरळतरो द्रुताभिगामी गंभीरस्वननुतिमान् सुघेनहासः ।
वीच्यंगैरधिकतरैरिहाधिवेलं मध्वाय प्रणतिमिव व्यधात् समुद्रः ॥ १६.१४ ॥

गोलीलास्वतिशयिनावगाधभावात् न्नोल्लंघ्यौ विविधगुणप्रकाशरत्नौ ।
मध्वाब्धी परममतेः प्रियं जनानां लावण्यं न तु जलधेरयं विशेषः ॥ १६.१५ ॥

अंभोधेस्त्वरिततरोर्मिपाणिमृष्टे स्वच्छेऽसौ विकटतटासने निषण्णः ।

व्याचख्यावतिचिरमैतरेयशाखा सूक्तानि प्रभुरतिसुंदरप्रकारम् ॥ १६.१६ ॥

गांभीर्यात् स्वनमधरीकरोति सिंधोः श्राव्यत्वं वहति तथाऽप्यहो स्वनोऽस्य ।
पूर्णेदुप्रभवदनः क ऐष धन्यो मत्वेत्थं जनजलधिस्तमाशु पर्यैत् ॥ १६.१७ ॥

वेदानां समुचितभाववाददक्षं ये वेदद्विषमिममूचिरे महेर्ष्याः ।
धिग्धिक् तानिति जनता जगाद तत्र स्वाश्चर्यात् किल कलितांजलिर्नमंती ॥
१६.१८ ॥

सन्नामं विपुलहृदे विधाय भक्त्या बिभ्राणाश्चरणरजः सुरेंद्रसेव्यम् ।
तत्स्नानादधिकशुचौ नदाधिराजे सस्नुस्ते द्विजनिकराः प्रशस्तकाले ॥ १६.१९ ॥

कल्लोलैः करिनिकरैरिवानिवार्यैः उल्लोलैर्जन निकरान् निपातयद्भिः ।
आक्रांताः प्रबलतरैश्च लोठ्यमाना हास्यत्वं प्रययुरुदन्वतीह नैके ॥ १६.२० ॥

मज्जंतं पृथुलहरीनिगूढमूर्तिं संपूर्णप्रमतिमसज्जनो जहास ।
यो लोकत्रयविजयी गुरुः प्रसिद्धः सोऽयं ही पतति लघूर्मिलीलयेति ॥ १६.२१ ॥

नीचानामवच वचांस्यजीगणन्नो दभ्राणां क्षुभितकराण्यदभ्रभोधः ।
क्रोष्टूनां श्वकलकलप्रदं विरावं पंचास्यो न हि गणयेदुदारवीर्यः ॥ १६.२२ ॥

जन्मस्थित्यवसितिदायिनं कटाक्षं लोकानामघटयदंबुधौ बृहद्धीः ।
आक्रांतोऽधिकगुरुणा स तेन तावत् मुंचन् संचलनमभूत्तटाकदेश्यः ॥ १६.२३ ॥

इत्याद्यैरपि चरितैरनन्यसाध्यैः न स्थेष्ठां बहुमतिमाप दुर्जनोऽस्मिन् ।
विद्वेषं व्यधित पुनर्निरस्तभाग्ये तस्मिन् दुर्मनसि तदेव शोभनं स्यात् ॥ १६.२४ ॥

संप्राप्तं सह सहजेन गंडवाटं स्वौजस्संप्रकटन आदिशद्विशंकम् ।
शुश्रूषामयमुचितो विधातुमीषत् लोकानामिति वचसा परीक्षकाणाम् ॥ १६.२५ ॥

श्रीकांतेश्वरसदनेऽनयत् किलैको यस्त्रिंशन्नरवरनीतकेतुयष्टिम् ।

आहत्या गुरुगदयैव नाळिकेराद् यो लेभे तरळतरात् फलानि कामम् ॥ १६.२६ ॥

ऐतादृग्बलविभवः स तस्य कंठं
तज्ज्येष्ठोऽप्यभित उभौ समं गृहीत्वा ।
निष्पेष्टुं परममवापतुः प्रयत्नं
संघर्षात् क्रमपरिवर्धमानतैक्ष्ण्यम् ॥ १६.२७ ॥

आस्विन्नावलसतरौ गुरोर्नियोगात् छत्राग्र्यनिलमहितौ च तावुभाभ्याम् ।
मुक्त्वाऽयःकठिनतरत्वचं शिरोधिं पर्यायस्फुटवचनां निपेततुः कौ ॥ १६.२८ ॥

आश्वस्तौ शुचिहृदिमावनूनमानौ उद्धर्तुं समगददंगुलिं धरास्थाम् ।
संगृह्य प्रसभरसादपि प्रयत्तौ सामर्थ्यं ययतुरिमौ न कंपनेऽस्याः ॥ १६.२९ ॥

निर्यत्नं वटुमधिरुह्य मंदहासी स प्रायादिह परितो नृसिंहगेहम् ।
ऐश्वर्यैरिति लघिमादिकैरुपेतो मध्वोऽभूत् त्रिभुवनचित्ररत्नराजः ॥ १६.३० ॥

पंचाशन्नरपनरोपनीतमात्रां यो वार्क्षीं गृहमधिरोहिणीं निनाय ।
स व्याख्यास्वरदमनाय पूर्ववाटो निर्देशाद् व्यधित गुरोर्गळ प्रपेषम् ॥ १६.३१ ॥

स्विन्नेऽस्मिन्नपि यतमान आग्रहोग्रे प्राच्यात् तत्प्रवचननिस्वनोऽतिरेजे ।
उद्धर्तुं विपुलहृदंगुलीं च नालं सोऽभूदित्यजनि कुतूहलं जनानाम् ॥ १६.३२ ॥

पर्यैक्षि प्रभुरितरैः शिवाग्निपूर्वैः नोपैक्षि प्रबलतरैस्तथा प्रयत्नैः ।
नावैक्षि क्वचिदपि शक्त्यपूर्तिरस्मिन् उत्प्रैक्षि स्वयमपि भीम इत्यवश्यम् ॥
१६.३३ ॥

लेखिन्यां मुहुरपिनह्य कृष्यमाणं नाप्येकं तनुरुहमस्य तूदपाट ।
नासाग्रे मृदुनि कृतैश्च मुष्टिघातैः नास्येंदोरतिबलिभिः प्रसन्नताऽऽसि ॥ १६.३४ ॥

पंचास्यः श्वभिरिव ही विहीनसारैः अंभोधिर्नग सरितां जलैरिवाल्पैः ।
हद्योतैरिव तरणिर्विडंबयन् नॄन् प्रत्यर्थिस्वसमनरैर्व्यवाहरत् सः ॥ १६.३५ ॥

पारंतीसुरसदनं विशालसंवित् संप्राप्तः खलु सुचिरान्निवेद्यहीनम् ।
ग्राम्याग्र्यक्षितिपतिभिर्दिनार्धमात्रात् तद्भूतीर्व्यधित सभूत बल्यनल्पाः ॥ १६.३६ ॥

भीमत्वे सह सहजैः प्रतिष्ठितः प्राक् पंचात्मा मुररिपुरंचितो यदत्र ।
पांचाल्या बलिसलिलं समं ददत्या सोऽस्मार्षीत् तमिममथ प्रपूज्यपूज्यः ॥
१६.३७ ॥

आयास्यन् किल सरिदंतराख्यदेशं ग्रीष्मे निर्जलमिह शुश्रुवांस्तटाकम् ।
तत्काले परमभिवर्षयन् घनौघं तत्पूर्त्यै व्यधित कुतूहलं जनानाम् ॥ १६.३८ ॥

दुर्मंत्रैः खलपटलैः प्रचोद्यमानो ग्रामेशो वृशाळपतिः प्रहर्तुमेनम् ।
संप्राप्तस्तत उत यांतमीक्षमाणः प्रोद्यंतं रविमिव विस्मितो ननाम ।१६.३९ ॥

क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं प्रस्थाय प्रचुरतरांतरः प्रभावी ।
श्रीकृष्णामृतपरमार्णवाभिधानां चक्रे सद्वचनततिं स्वभक्तभूत्यै ॥ १६.४० ॥

स ग्रामं परमपि यात उच्चभूतिं विद्वांसः क्व कुहरकूपदर्दुराभाः ।
इत्यूचे मदमतिमानिनोऽखिलज्ञम् मन्यस्य क्षपयितुमेव तज्जनस्य ॥ १६.४१ ॥

सर्व ज्ञोऽप्ययमधिकं न यज्ञभंगीं संवित्ते यतिरिति बद्धनिश्चयोऽसौ ।
आभांतं परिषदि मत्सरादपृच्छत् कर्मार्थश्रुतिगहनार्थखंडभावम् ॥ १६.४२ ॥

छंदोभ्यश्च्युतरससंग्रहप्रवीणान् षष्ठेऽह्नि प्रतिविहितान् प्रजाधिपेन ।
नाराशंस्यचरमचारुमंत्रभेदान् ऊचेऽसौ तमभिदधद् विसंशयांशः ॥ १६.४३ ॥

पांडित्यं परममवेत्य तस्य तादृक् संघर्षत् क्षुभितमना विपक्षसंघः ।
नार्थः स्यादयमिति वर्णयन्नथ त्वं तं ब्रूहीत्युरुमतिनेरितोऽद्रवद् द्राक् ॥ १६.४४ ॥

सोऽपृच्छत् तमथ महाह्वयोपसर्गा यत्रोक्ता मनुचरणोपसृज्यरूपाः ।
तस्यार्थं वचनचयस्य तं ब्रुवाणः स्थैर्यार्थं सपदि स लेखयां बभूव ॥ १६.४५ ॥

संपूर्णं शशिनमिवोदितं कृशः ष्वा
चक्षोभाशुभनिकरो निरीक्ष्य मध्वम् ।
प्रत्यर्थी स्वयमिति दूरवोऽभिधावन्
किं तेन क्षतममृताकरस्य तस्य ॥ १६.४६ ॥

निस्स्वानां कतिपयभुक्तियुक्तभक्तं
भक्तानां व्यधित चतुर्गुणं दयालुः ।
भुंक्ते स्म त्रिदशनरोपभोग्यमन्नं
संप्रीत्यै स धनवतां बृहत्प्रबोधः ॥ १६.४७ ॥

वृष्ट्यादेः स नियमनादि चक्र एतत्
चित्रं किं भुवननियामके समीरे ।
अप्येवं भुवनगुरोः कृतानुवादः
कृत्येषु प्रवर इतीह वर्णयामः ॥ १६.४८ ॥

इत्यूचे धरणिसुरेण केवलं नो
माध्वीयं विविधकथा कथासु मान्या ।
साक्षादप्यमरवरैरुदीर्यमाणा
गंधर्वैर्द्युसदसि तन्मुदे जगेऽसौ ॥ १६.४९ ॥

तां पद्यप्रणिगदितां तु मूर्छयित्वा
तानानामुचिततयाऽऽत्तपंचमाद्याः ।
गांधारं द्युविषयमुज्ज्वलं सृजंतो
ग्रामं ते प्रजगुरकाकिकम्रकंठाः ॥ १६.५० ॥

आनम्रैः सुमुकुटमौलिभिः कराग्रैः
आताम्रैः प्रतिकलितैः स्मितैर्मुखाब्जैः ।
आश्रावि स्थिरतरभक्तिभिः सुरेंद्रैः
तद्गीता दशधिषणार्यवर्यचर्या ॥ १६.५१ ॥

गीर्वाणैर्विजयमहोत्सवस्य पूजां
कुर्वाणैरविरळसंविदस्तदानीम् ।
विस्मेरैर्मुनिनिकरोपदेवयुक्तैः
सुस्मेरैरथ तमवेक्षितुं प्रजग्मे ॥ १६.५२ ॥

आदर्शं गुणगणदर्शने मुरारेः
सच्छास्त्रं रचितमनेन वर्णयंतः ।
प्रद्योतैरुडुपदवीं प्रकाशयंतः
प्रैक्षंत प्रचुरमनोविलाससमेते ॥ १६.५३ ॥

नाकींद्रास्तमवनिभागमावसंतं
सुश्लोकैरपि भुवनानि भूषयंतम् ।
नेमुः खादुपनिषदं तदैतरेयीं
व्याख्यांतं विविधविषिष्टशिष्यमध्ये ॥ १६.५४ ॥

श्रीमंतं शशिवदनं कुशेशयाक्षं
गंभीरस्वरमतिदिव्यलक्षणाढ्यम् ।
पश्यंतः स्वगुरुमथार्चिचन् कृतार्था
वाण्या तं हरिरतिपूर्णकाममेते ॥ १६.५५ ॥

अहरो दुरागमतमः स्वगोगणैः
अकरोर्मुकुंदगुणवृंददर्शनम् ।
अजयश्चतुर्दश जगंति सद्गुणैः
शरणं गुरो करुणयाऽपि नो भवेः ॥ १६.५६ ॥

नमस्ते प्राणेश प्रणतविभवायावनिमगा
नमः स्वामिन् रामप्रियतम हनूमन् गुरुगुण ।
नमस्तुभ्यं भीम प्रबलतम कृष्णेष्ट भगवन्
नमः श्रीमन् मध्व प्रदिश सुदृशं नो जय जय ॥ १६.५७ ॥

इति निगदितवंतस्तत्र वृंदारकेंद्रा

गुरुविजयमहं तं लाळयंतो महांतम् ।
ववृषुरखिलदृश्यं पुष्पवारं सुगंधं
हरिदयितवरिष्ठे श्रीमदानंदतीर्थे ॥ १६.५८ ॥

॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
श्रीनारायणपंडिताचार्यविरचिते श्रीमध्वविजये
आनंदांकिते षोडशः सर्गः ॥
॥ समाप्तोयं ग्रंथः भारतीरमण मुख्यप्राणंतर्गत
श्री कृष्णार्पणमस्तु ॥